खल सत्क्रियामाणोऽपि, ददाति कलह सताम् ।
दुग्धधौतोऽपि किं याति, वायस कलहसताम् ॥ ३३

खलाना कण्टकाना च, द्विविधैव प्रतिक्रिया ।
उपानद् मुखभङ्गो वा, दूरतो वा विसर्जनम् ॥ ३४ ॥

तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितै ।
साधव परसम्पत्या खला परविपत्तिभि ॥ ३५ ॥

## श्रावक-वणिक्

श्रद्धालुता श्राति पदार्थचि तनाद्,
धनानि पात्रेषु वपत्यनारतम् ।
किरत्ययुण्यानि सुसाधुसेवनाद्,
अद्यापि त श्रावकमाहुरजसा ॥ १ ॥

अक्षुद्रो रूपसौम्यो विनयगुणयुत क्रूरता शाठ्य मुक्तो
मध्यस्थो दीर्घदर्शी परहितनिरतो लब्धलक्ष कृतज्ञ ।
सदाक्षिण्योऽप्यभीरु सदयगुणरुचि सत्कथ पक्षयुक्तो
वृद्धाहो लज्जयालु शुभजनान्वितो धमरत्नस्य योग्य ॥२॥

पोषका स्वकुलस्यैते, कारक यस्थकुरुम ।
स्वकुल घ्नन्ति चत्वारो वणिक् श्वानो गजा द्विजा ॥३॥

स्थाने सिंहसमा वने मृगसमा देशान्तरे जम्बुका,
आहारे वकभीमसेनसदृशा श्वानोपमा मैथुने ।
रूप मर्कटवत् पिशाचलिपिम्त् चायेऽपि ते निर्गुणा
कार्यार्थे कटका परार्थलटका एते गुणा वाणिजा ॥ ४ ॥

राजा तुष्टो ग्राममेक ददाति ग्रामाधीश क्षेत्रमेक ददाति ।
क्षेत्राधीश सीत्यमेक ददाति सारस्तुष्ट सपद स्वा ददाति।*
(वणिक् तुष्ट हस्ततालि ददाति)

मूल्येन किञ्चित् कलया च किञ्चित्,
मानेन किञ्चित् तुलया च किञ्चित् ।
किञ्चि च्च किञ्चित् सभासमक्षं,
मुष्णन् वणिग् यद्यपि सोऽपि साधु ॥ ६ ॥

श्रुत्वा दुर्वाक्यमुच्चैर्हसति मुपति च स्वीयमानेन लोकं,
क्रयर्द्धं गृह्णाति पण्यं, बहुकमिति वदन्नर्धमेव प्रदत्ते ।
स्वीयान्यायेऽपि पूर्वं, व्रजति नृपगृहं लेख्यके कूटकारी,
मध्ये सिंहप्रताप प्रगट मृगमुख स्याद्वणिग् धूर्त्तराजः ॥७

---

## 卐 — ज्ञान — 卐

ज्ञानादासाद्यते मुक्ति, ज्ञानात् स्वर्गोद्भवं सुखम् ।
लभन्ते प्राणिनो यस्मात् तज्ज्ञानं स्वद्रुमोपमम् ॥ १ ॥

यानपात्रसमं ज्ञानं, बुडतां भववारिधौ ।
मोहान्धकारसंहारे, ज्ञानं मार्त्तण्डमण्डलम् ॥ २ ॥

भुवने हि परं ज्ञानं, ज्ञानं सर्वार्थसाधकम् ।
अनिष्टवस्तुविस्तार—वारक ज्ञानमीरितम् ॥ ३ ॥

अन्नदानात् परं नास्ति, विद्यादानं ततोऽधिकम् ।
अन्नदानात् क्षणं तृप्ति., यावज्जीवं च विद्यया ॥ ४ ॥

न चौरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारी ।
व्यये कृते वर्धत एव नित्यं, विद्याधन सर्वधनप्रधानम् ॥५॥

अव्यये व्ययमायाति व्यये याति सुविस्तरम् ।
अपूर्वः कोऽपि भंडारस्तव भारति दृश्यते ॥ ६ ॥

गाढं गुणवति विद्या, न मुदे विनय विना ।
मूर्खतापि मुदे भूयान् महत्सु विनयान्विता ॥ ७ ॥

विनयेन विद्या ग्राह्या, पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या, चतुर्थं नास्ति कारणम् ॥ ८ ॥

आरोग्यबुद्धिविनयोद्यमशास्त्ररागा,
पञ्चान्तरा पठनसिद्धिकरा नराणाम् ।
आचार्यपुस्तकनिवाससहायभिक्षा,
बाह्याश्च पञ्च पठनं परिवर्धयन्ति ॥ ९ ॥

काकचेष्टा बकध्यानं, श्वाननिद्रा तथैव च ।
स्वल्पाहारश्च स्त्रीत्यागो, विद्यार्थिनः पञ्चलक्षणम् ॥ १० ॥

ज्ञानस्य ज्ञानिनो वापि निन्दाप्रद्वेषमत्सरैः ।
उपघातैश्च विघ्नैश्च, ज्ञानघ्नं कर्म बध्यते ॥ ११ ॥

स्वगृहे पूज्यते मूर्खः, स्वग्रामे पूज्यते प्रभुः ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ १२ ॥

पण्डिते हि गुणास्सर्वे, मूर्खे दोषाश्च केवलम् ।
तस्मात् मूर्खसहस्रेभ्य प्राज्ञ एको विशिष्यते ॥ १३ ॥

अज्ञः सुखमाराध्य, सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ॥ १४ ॥

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १५ ॥

यद्यपि बहुनाधीते तथापि पठ पुत्र व्याकरणम् ।
स्वजनः श्वजनो माभूत्, सकलं शकलं सकृच्छकृत् ॥१६

अव्याकरणजनश्चान्धो बधिरः कोशवर्जितः ।
साहित्येन विना पङ्गुः मूकस्तर्कविवर्जितः ॥ १७ ॥

भारं स वहते तस्य, ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥ १८ ॥

क्रियाविरहितं हन्त, ज्ञानमात्रमनर्थकम् ।
गतिं विना पथिज्ञोऽपि, नाप्नोति पुरमीप्सितम् ॥ १९ ॥

जहा खरो चंदणभारवाही, भारस्स भागी ण हु चंदणस्स ।
एवं खु णाणी चरणेण हीणो, णाणस्स भागी ण हु सुग्गइए ॥२० ॥

## ॐ कर्म-भाग्य-विधाता ॐ

विधिर्विधाता नियतिः स्वभावः, कालो ग्रहाश्चेश्वरकर्म दैवं ।
भाग्यानि पुण्यानि यमः कृतान्त, पर्यायनामानि पुराकृतस्य ॥ १ ॥

वैद्या वदन्ति कफपित्तमरुद्विकारं,
नैमित्तिका ग्रहकृतं प्रवदन्ति दोषम् ।
भूतोपसर्गमथ मन्त्रविदो वदन्ति,
कर्मैव शुद्धमतयो गतयो यतयो गृणन्ति ॥ २ ॥

किं करोति नरः प्राज्ञः, प्रेर्यमाण स्वकर्मभिः ।
प्रोक्तैव हि मनुष्याणां, बुद्धिः कर्मानुसारिणी ॥ ३ ॥

खनन्तु सप्तपातालं, भ्रमन्त्वाकाशमण्डले ।
धावन्तु सकलां पृथ्वीं, नादत्तमुपतिष्ठते ॥ ४ ॥

सुखस्य दुःखस्य न कोऽपि दाता,
परो ददातीति कुबुद्धिरेषा ।
पुराकृतं कर्म तदेव भुज्यते,
दुष्कर्म नून तपसा च हीयते ॥ ५ ॥

राजानः खेचरेन्द्राश्च केशवाः चक्रवर्तिनः ।
देवेन्द्रा वीतरागाश्च मुच्यन्ते नैव कर्मणा ॥ ६ ॥

औषध शकुन मन्त्र, नक्षत्र ग्रह देवता ।
भाग्यकाले प्रसीदन्ति, अभाग्ये यान्ति विक्रियाम् ॥ ७ ॥

भाग्य फलति सर्वत्र न विद्या न च पौरुषम् ।
समुद्रमथनाल्लेभे, हरि-लक्ष्मीं हरो विषम् ॥ ८ ॥

किं करोति पिता श्रीमान् यद्यभाग्यभृत सुत ।
शङ्खो भिक्षामटन् दृष्टो, रत्नाकरभवोऽपि यत् ॥ ९ ॥

अभाग्ये सत्यनर्थाय मता सङ्गोऽपि जायते ।
नालिकेरजल जज्ञे कर्पूरमिलनाद्विषम् ॥ १० ॥

कर्मणो हि प्रधानत्व किं कुर्वन्ति शुभा ग्रहा ।
वशिष्ठदत्तलग्नोऽपि राम प्रव्रजितो वने ॥ ११ ॥

तावत्तेजस्विना तेजो यावद्भाग्यमभङ्गुरम् ।
क्षीणतैल कियत्काल, प्रदीपोऽपि प्रदीप्यते ॥ १२ ॥

बन्धुर्वैरिजनायते गुणवतीकान्ता च सन्तप्यते
मित्र चापि खलायते, गुणनिधि पुत्रोप्यमित्रायते ।
श्रीखण्ड दहनायते श्रवणयो सूक्त तु शूलायते,
जाते पुण्यविपर्यये तनुभृता अर्थाऽप्यनर्थायते ॥ १३ ॥

हसन्तो हेलया जीवा कर्मबन्ध प्रकुर्वते ।
तद्विपाका हि कार्येषु रुदद्भिरपि भुज्यते ॥ १४ ॥

येन भृभङ्गमात्रेण भज्यन्ते पर्वता अपि ।
तरह्यो कर्मवश्ये, भूयेभिक्षापि नाप्यते ॥ १५ ॥

जातिचातुर्यहीनोऽपि कर्मण्य ग्रुदयावहे ।
क्षणाद्रङ्कोऽपि राजास्यात् छत्रच्छन्नदिगन्तर ॥ १६ ॥

तादृशी जायते बुद्धि व्यवसायोऽपि तादृश ।
सहायास्तादृशा यत्र यादृशी भवितव्यता ॥ १७ ॥

पौलस्त्यः कथमन्यदारहरणे, दोषं न विज्ञातवा-

नक्षैश्चापि युधिष्ठिरेण रमता ज्ञातो न दोषो नु किम् ।

रामेणापि वने न हेमहरिणस्यासंभवो लक्षितः,

प्रत्यासन्नविपत्तिमूढमनसां, प्रायो मतिः क्षीयते ॥१८॥

नीचैर्गोत्रं वीरे मल्लौ स्त्रीत्वं, प्रवासिता पाण्डवे ।

कृष्णे च सर्वनाशो, मेतार्ये जातिहीनत्वम् ॥ १९ ॥

हरणं जनक सुतायाः, निषादसेवाऽसुखं हरिश्चन्द्रे ।

स्त्रीत्यागं नलभूपे, विक्रयो मलयसुन्दर्याः ॥ २० ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे,

विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।

रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारित,

सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥२१॥

नमस्यामो देवान् ननु हतविधेस्तेऽपि वशगाः

विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलद ।

फलं कर्मायत्तं यदि किमपरैः किं च विधिना,

नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ २२ ॥

चिन्ताचक्रसमारूढो, योगदण्डसमाहतः ।

कर्माष्टकुलालेन, भ्राम्यते घटवन्नरः ॥ २३ ॥

यथा धेनुसहस्रेषु, वत्सो विन्दति मातरम् ।

तथा पूर्वकृतं कर्म, कर्त्तारमनुगच्छति ॥ २४ ॥

सावद्यं चित्तवाक्कायै-रकुर्वतोऽपि जन्मिन ।

अनन्तकालमेकाक्षास्विप्रत्यविरतेः फलम् ॥ २५ ॥

दग्धे बीजे यथात्यन्त, प्रादुर्भवति नाङ्कुरः ।

कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ २६ ॥

इहोपपत्तिर्मम केन कर्मणा क्व च पयातव्यमितो भवादिति।
विचारणा यस्य न जायते हृदि कथं स धर्मप्रवणो
भविष्यति ॥ २७ ॥

## अनित्यता–असारता

असारमेव ससारं स्वरूपमिति चेतसि।
विभाव्य हितदे धर्मे यत्नं कुरुत भो जना ॥ १ ॥

लोक पृच्छति मे वार्तां शरीरे कुशलं तव।
कुत कुशलमस्माक आयुर्याति दिने दिने ॥ २ ॥

चला विभूति क्षणभङ्गि यौवनं, कृतान्तदन्तान्तरवर्ति जीवितं।
तथाप्यवज्ञा परलोकसाधने अहो नृणा विस्मयकारि
चेष्टितं ॥ ३ ॥

चलालक्ष्मीश्चला प्राणाश्चलं चचलयौवनम्।
चलाचलेऽस्मिन् ससारे धर्म एको हि निश्चल ॥ ४ ॥

आयुर्धनं यौवन च स्पर्द्धयेव परस्परम्।
सत्वरं गत्वराण्येव, ससारेऽस्मिन् शरीरिणाम् ॥ ५ ॥

यौवनं जरया ग्रस्त काय रोगैरभिद्रुतम्।
जीवित यमराजस्य वशवर्ती क्व सारता ? ॥ ६ ॥

व्याघ्रवक्त्रे प्रविष्टस्य कराले तीक्ष्णदंष्ट्रया।
मृगस्य यत्सुखं भवति, तत्सुखं भववर्तिनाम् ॥ ७ ॥

यथा शोफस्य पुष्टत्वं यथा वा वध्यमण्डनम्।
सुखाभिमानधनिनो विनाशो देहिना तथा ॥ ८ ॥

जीव मरणेण समं उप्पज्जइ जुव्वणं सह जराए।
रिद्धी विणाससहिआ हरिसविसाओ न कायव्वो ॥ ९ ॥

अनित्यानि शरीराणि, विभवो नैव शाश्वत. ।
नित्यं सन्निहितो मृत्यु., कर्त्तव्यो धर्मसंग्रह ॥ १० ॥

न शक्यं निर्मलीकर्त्तुं, गात्रं स्नानशतैरपि ।
अश्रान्तमिव श्रोतोभि-र्नवभिमलमुद्भिरत् ॥ ११ ॥

यदि नामास्य कायस्य, यदन्तस्तद्बहिर्भवेत् ।
दण्डमादाय लोकोऽयं, शुनः काकांश्च वारयेत् ॥ १२ ॥

किञ्च संस्नापितो लिप्तो, भूषितो भोजितोऽपि च ।
खलवत् खलु कायोऽयं, नात्मसात् कर्हिचिद्भवेत् ॥ १३ ॥

अहन्यहनि भूतानि, गच्छन्ति यममन्दिरम् ।
शेषा जीवितुमिच्छन्ति, किमाश्चर्यमतः परम् ॥ १४ ॥
(महाभारत शान्तिपर्व श्लोक–२१)

समुत्पद्य समुत्पद्य, विपद्यन्तेऽप्सु बुद्बुदाः ।
यथा तथा क्षणेनैव, शरीराणि शरीरिणाम् ॥ १५ ॥

न सा जाति र्न सा योनि-र्न तत्स्थानं न तत्कुलम् ।
न जाता न मृता यत्र, सर्वे जीवा अनन्तश. ॥ १६ ॥

नो विद्या न च भेषज न पिता नो बान्धवा नो सुता,
नाभिष्टा कुलदेवता न जननी स्नेहानुबन्धान्विता ।
नार्थो न स्वजनो न वा परिजनः शारीरिकं नो बलम्,
नो सक्ता सततं सुरा सुखरताः सन्धातुमायुः क्षमा. ॥१७॥

दिव्यज्ञानयुता जगत्त्रयनुता शौर्यान्विता सत्कृताः,
देवेन्द्राः सुरवृन्दवन्द्यचरणास्सद्विक्रमाश्चक्रिणः ।
वैकुण्ठा बलशालिनो हलधरा ये रावणाद्याः परे,
ते कीनाशमुख विशन्त्यशरणा यद्वानलङ्घ्यो विधि ॥१८॥

सा नत्थि कला तं नत्थि उसहंतं नत्थि किंपि विन्नाणं ।
जेण धरिज्जइ काया, खज्जन्ती कालसप्पेणं ॥ १९ ॥

मङ्गलैः कौतुकैर्योगै—र्विद्यामन्त्रैस्तथौषधैः ।
न शक्ता मरणात्त्रातुं सेन्द्रा देवगणा अपि ॥ २० ॥

शिशुमशिशुं कठोरमपण्डितमपि च पण्डित
धीरमधीरं मानीनममानीनमगुणमपि च बहुगुणम् ।
यतिमयतिं प्रकाशमप्रलीनमचेतनमथ सचेतनम्,
निशि दिवसेऽपिसान्ध्यसमयेऽपि विनश्यति कोऽपि
कथमपि ॥ २१ ॥

(આચારાંગ ટીકા)

पुरन्दरसहस्राणि चक्रवर्तिशतानि च ।
निर्वापितानि कालेन प्रदीपा इव वायुना ॥ २२ ॥

गर्भे जन्मनि बाल्ये च यौवने वार्धकेऽपि च ।
जन्तो र्जीवितरत्नानि हरते कालतस्करः ॥ २३ ॥

धी धी धी संसारं देवो मरिउण जं तिरी होइ ।
मरिउण रायराया परिपच्चइ निरयजालाहिं ॥ २४ ॥

इन्द्रोऽपि कीटता याति नरकं चक्रवर्त्यपि ।
पृथ्वीनाथोऽपि पत्तित्वं, धनाढ्योऽपि दारिद्रताम् ॥ २५ ॥

धिक् संसारं यत्र युगा परमरूप गर्वितं ।
मृत्वा जायते कृमिस्तत्रैव कलेवरे निजकं ॥ २६ ॥

पिता दासो दासो भवति जनको बन्धुरहितो,
रिपुर्बन्धुर्माता भवति दुहिता सापि जननी ।
अनिष्टं स्यादिष्टं परिणमति शमासुखनया
जनो धिक् संसारे तदपि रमते नो विरमति ॥ २७ ॥

अनन्तं पार्थिवैर्भुक्ता कालेनोर्वी धनानि च ।
मेलितानि परं त्यक्त्वा गतास्ते स्वहस्तैः सह ॥ २८ ॥

द्रव्याणि तिष्ठन्ति गृहेषु नार्यो विश्राणभूमौ स्वजनाः
स्मशाने ।
देहश्चितायां परलोकमार्गे कर्मानुगो याति स एक जीव. ॥२९

गृहे अर्थानि वर्तन्ते, स्मशाने मित्रबान्धवा. ।
सुकृतं दुष्कृतं चैव, गच्छन्तमनुगच्छति ॥ ३० ॥

गृहीत्वा पुण्यपापे द्वे, नाणके स्वयमर्जिते ।
शेषं विमुच्य निःशेषं, जीवा यान्ति भवान्तरे ॥ ३१ ॥

मातापितृसहस्राणि, पुत्रदारशतानि च ।
युगे युगे व्यतीतानि, कस्याहं कस्य बान्धवाः ॥ ३२ ॥

जम्मे जम्मे सयणावलीउ, मुक्काउ जाउ जीवेण ।
ताउ सव्वागासे संगहिआउ न मायंति ॥ ३३ ॥

सव्वे जीवा जणिआ, जणिओ सव्वेहिं एस पुण गसियो ।
सव्वे अणेण गसिआ, अणाइ संसारभमणंमि ॥ ३४ ॥

कियती न हि मे माता भूता, कियती भगिनी नहि संजाता ।
कियती वेला न हि संपन्नः, कियती वेला नैव विपन्नः ॥३५

जाता. कति नहि सुखसंबंधा, न विदन्त्येते जीवा अन्धाः ।
कष्टरे मोहनटस्य विलासः, सर्वो नव इव पुनराभासः ॥३६

सततविविधजीव. ध्वंसनाद्यैरुपायै.
स्वजनतनुनिमित्तं कुर्वते पापमुग्रम् ।
व्यथिततनुमनस्का जन्तवोऽमी सहन्ते,
नरकगतिमुपेता दुःखमेकाकिनस्ते ॥ ३७ ॥

एक प्रजायते जन्तु—रेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृत—मेक एव च दुष्कृतम् । ३८ ॥

दुरस्था पर्वता रम्या, वेश्या च मुखमण्डने ।
वार्त्ता रम्या च युद्धस्य, भवो रम्यश्च बाह्यत. ॥ ३९ ॥

स्वप्ने यथाय पुरुष प्रयाति
। ददाति गृह्णाति करोति वक्ति ।
निद्राक्षये तच्च न किञ्चिदस्ति
सर्वं तथेद हि विचार्यमाणम् ॥ ४० ॥

कोऽह कस्मिन् कथमायात, का मे जननी को मे तात ।
इति परिभावयत• ससार, सर्वोऽय स्वप्नव्यवहार ॥४१॥

दुःख स्त्रीकुक्षिमध्ये प्रथममिह भवेद् गर्भवासे नराणाम्,
बाल्ये चापि दुःख मल्लुलितवपु स्त्रीपय पानमिश्रम् ।
तारुण्ये चापि दुःख भवति विरहज वृद्धभावोऽप्यसार,
ससारे रे मनुष्या वदत यदि सुख स्वल्पमप्यस्ति किञ्चिद्
। । ॥४२॥

निर्द्रव्यो धनचिन्तया धनपतिस्तद् रक्षणे चाकुलो,
नि स्त्रीकस्तदुपायसगतमतिस्स्त्रीमानपत्येच्छया ।
प्राप्तस्तानखिलान्यपीह सतत रोगै पराभूयते
जीव कोऽपि कथञ्चन पि नियत प्राय सदा दु खित ॥४३

जन्मदु ख जरादु ख, मृत्युदु ख पुन पुन ।
ससारसागरे घोरे तस्मात् जागृत जागृत ॥ ४४ ॥

रमणीस्तनभरनाभिदेश दृष्ट्वा मागान्मोहनिवेशम् ।
एतन्मासवसादिविकार, मनसि विमशय वारवारम् ॥४५॥

भवे भवे भवेद्देहो, देहिना भवकारणम् ।
न पुन सर्ववित् प्रोक्त मुक्तिकारि कृपानतम् ॥ ४६ ॥

ग्रामान्तरे विहितशम्बलक, प्रयाति
सर्वोऽपि लोक इति रूढ प्रसिद्धा ।
मूढस्तु दीर्घपरलोकपथप्रयाणे
पाथेयमात्रमपि नो विदधात्यधन्य ॥ ४७ ॥

गव्यूतं प्रव्रजन् मार्गं, पाथेयं यः करोति सः ।
मृत्युमार्गे न वै कुर्याद्, दुर्बुद्धिः स्वजनैर्विना ॥ ४८ ॥

शम्बलं कुरु रे मूढ, धर्मं दानं तपो जपम् ।
इहामुत्र हितार्थाय, न ज्ञातं व्रजनं भवेत् ॥ ४९ ॥

## 卐 मृत्यु 卐

अत्थेण न छुट्टिज्जइ, वाहुवलेण ण मंततंतेहिं ।
ओसहमणिविज्जाहिं अ, न धरा मच्चुस्स घडीआवि ॥१॥

स्वमस्तकसमारूढ, मृत्यु पश्येज्जनो यदि ।
आहारोऽपि न रोचेत, किमुतान्या विभूतयः ॥ २ ॥

अशनं मे वसनं मे, जाया मे बन्धुवर्गो मे ।
इति मे मे कुर्वाण, कालवृको हन्ति पुरुषाजम् ॥ ३ ॥

पुत्रो मे भ्राता मे, स्वजनो मे गृहकलत्रवर्गो मे ।
इति कृत मे मे शब्दं, पशुमिव मृत्युर्जनं हरति । ४ ॥

वध्यस्य चौरस्य यथा पशोर्वा,
संप्राप्यमाणस्य पद वधस्य ।
शनै शनैरेति मृतिः समीपं,
तथाखिलस्येति कथं प्रमादः ॥ ५ ॥

अहो नु मोहमुग्धस्य, लोकस्येयं प्रमादिता ।
यद्वालं मृतमालोक्य, वृद्धस्तिष्ठति निर्भयः ॥ ६ ॥

अध्यवसायेन निमित्तेन, आहारेण वेदनया पराघातेन ।
स्पर्शेनापानप्राणेन, सप्तविधं क्षीयत आयु ॥ ७ ॥

भवति मरण प्रत्यासन्नं विनश्यति यौवनं,
प्रभवति जरा सर्वाङ्गानां विनाशविधायिनी ।

विरमत बुधा कामार्थेभ्यो वृषे कुरुतादर
वदितुमिति वा वर्णोपान्ते स्थित पलित जने ॥८॥

उद्घाटितनवद्वारे पञ्जरे विहगोऽनिल ।
यत्तिष्ठति तदाश्चर्य, प्रयाणे विस्मय कुत ॥ ९ ॥

जन्मिना प्रकृतिर्मृत्यु-विकृति र्जीवित पुन ।
तत स्वभावसिद्धयर्थे को विषादो विवेकिन ॥ १० ॥

ये पातालनिवासिनो सुरगणा ये स्वैरिणो व्यतरा,
ये ज्योतिष्कविमानवासिविबुधास्तारास्तचन्द्रादय ।
सौधर्मादिसुरालये सुरगणा ये चापि वैमानिका-
स्ते सर्वेऽपि कृतान्तवासमवशा गच्छन्ति किं शुच्यते ॥११

मृत्योर्विभेषि किं बाल स च भीत न मुञ्चति ।
अजात नैव गृह्णाति, कुरु प्रयत्नमजन्मनि ॥ १२ ॥

हा माया हा बप्पो हा बन्धू हा पणयणी सुओइट्ठो ।
पिक्खतस्सविसव्व, मरइकुड्डव सकरुणस्स॥१३

## सयम

भवे भवे भवेद्देहो देहिना भवकारण ।
न पुन सर्ववित्प्रोक्त मुक्तिकारि कृपाव्रतम् ॥ १ ॥

महता पुण्यपण्येन क्रीतेय कायनौस्त्वया ।
पार भवोदधेर्गन्तु त्वर यावन्न भिद्यते ॥ २ ॥

दीक्षा गृहीता दिनमेकमेव
येनोग्रचित्तेन शिव स याति ।
न तत्कदाचित्तदवश्यमेव
वैमानिक स्यात् त्रिदश प्रधान ॥ ३ ॥

ये रात्रौ सर्वदाहारं, वर्जयन्ति सुमेधसः ।
तेषां पक्षोपवासस्य, फलं मासेन जायते ॥ ६ ॥

महाभारत शान्तिपर्व

चत्वारो नरकद्वारा प्रथमं रात्रिभोजनम् ।
परस्त्रीगमनं चैव, सन्धानानन्तकायिके ॥ ७ ॥

संसक्तजीव संघातं, भुञ्जाना निशि भोजनम् ।
राक्षसेभ्यो विशिष्यन्ते, मूढात्मानः कथं नु ते ॥ ८ ॥

पद्म पुराण प्रभासखंड

वासरे च रजन्यां च, यः खादन्नेव तिष्ठति ।
शृङ्गपुच्छपरिभ्रष्टः, स्पष्टं स पशुरेव हि ॥ ९ ॥

अस्तंगते दिवानाथे, आपो रुधिरमुच्यते ।
अन्नं मांससमं प्रोक्तं, मार्कण्डेन महर्षिणा ॥ १० ॥

ब्रह्मपुराण

## प्रमाद त्याग

मज्जं विसय कसाया निद्दा विकहा य पंचमी भणिआ ।
एए पंच पमाया, जीवं पडंति संसारे ॥ १ ॥

प्रमादः परमद्वेषी प्रमादः परमं विषम् ।
प्रमादो मुक्तिपुर्दस्युः प्रमादो नरकालयः ॥ २ ॥

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ ३ ॥

यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा,
यावच्चेन्द्रियशक्तिरप्रतिहता, यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा, कार्यः प्रयत्नो महान्,
प्रोद्दीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ॥ ४ ॥

यावत्स्वस्थमिदं देहं यावद् मृत्युश्च दूरतः ।
तावदात्महितं कुर्यात्, प्राणान्ते किं करिष्यति ॥ ५ ॥

जरा जाव न पीडइ वाहि जाव न वड्ढइ ।
जाव इंदिया न हायंति, ताव धम्मं समायरे ॥ ६ ॥

विलम्बो नैव कर्त्तव्यो आयुयाति दिने दिने ।
न करोति यमः क्षान्तिं, धर्मस्य त्वरिता गतिः ॥ ७ ॥

छायमिसेण कालो सयलजिआण छलं गवेसंतो ।
पासं कहवि न मुंचइ ता धम्मे उज्जमं कुणह ॥ ८ ॥

अज्ज कल्लं परं परारिं पुरिसा चिन्तन्ति अत्थसंपत्तिं ।
अंजलिगयं व तोयं गलंतमाउं न पिच्छन्ति ॥ ९ ॥

जं कल्ले कायव्वं तं अज्ज च्चिय करेह तुरमाणा ।
बहु विग्घो हु मुहुत्तो मा अवरण्हं पडिक्खेह ॥ १० ॥

ही संसारसहाव, चरियं नेहाणुरागरत्तावि ।
जे पुव्वण्हे दिट्ठा ते अवरण्हे न दीसन्ति ॥ ११ ॥

मा सुअह जग्गि अव्वे पलाइअव्वम्मि कीसवी समेह ।
तिन्नि जणा अणुलग्गा रोगो अ जरा अ मच्चु अ ॥१२॥

दिवस निसाघडिमालं आउसलिलं जीआण घितूण ।
चंदाइच्चबइल्ला कालरहट्टं भमाडंति ॥ १३ ॥

आयुर्वर्षशतं नृणां परिमितं, रात्रौ तदर्धं गतं
तस्यार्धस्य कदाचिदर्धमधिकं, वृद्धत्वबाल्यत्वयोः ।
शेषं व्याधिवियोगशोकमदनासेवादिभिर्नीयते,
देहे वारितरङ्गचञ्चलतरे धर्मयुतं प्राणिनाम् ॥ १४ ॥

अवाप्य धर्मावसरं विवेकी कुर्याद्विलम्बं नहि विस्तराय ।
तातो जितस्तक्षशिलाधिपेन रात्रिं व्यतिक्रम्य पुनः न लेभे ॥१५

क्रोधावेशे नदीपूरे, प्रवेशे पापकर्मणि ।
अजीर्णे भुक्तौ भीस्थाने, कालक्षेप प्रशस्यते ॥ १६ ॥

धर्मारम्भे ऋणच्छेदे, कन्यादाने धनागमे ।
शत्रुघाते च रोगे च, कालक्षेपो न कारयेत् ॥ १७ ॥

निर्वाणदीपे किमु तैलदानं, चौरे गते वा किमु सावधानं ।
पयोगते किं खलु सेतुबन्ध· वयोगते किं ननु धर्मरागः ॥१८

किं नास्ति मरणं तस्मिन्, शरणं वास्ति किञ्चन ।
किं नानित्याश्च संयोगा, निश्चिन्तैस्स्थीयते कथम् ॥१९॥

युवैव धर्मशीलः स्यादनित्यं खलु जीवितं ।
कोहि जानाति कस्याद्यः मृत्युकालो भविष्यति ॥ २० ॥

नान्तकस्य प्रियः कश्चिन्, न लक्ष्म्याः कोऽपि वल्लभ· ।
नाप्तो जराया· कोप्यस्ति, यूयं तदपि सुस्थिता ॥ २१ ॥

## वैराग्योपदेशक

जन्तव· सुखमिच्छन्ति, निस्तुपं तच्छिवे भवेत्,
तद्ध्यानात्तन्मनः शुध्या, कपायविजयेन सा ।
स इन्द्रियजयेन स्यात्, सदाचारादसौ भवेत्,
स जायते सदुपदेशान्नृणां गुणनिबन्धनम् ॥ १ ॥

चत्तारि परमंगाणि, दुल्लहाणीह जंतुणो ।
माणुसत्तं सुइ सद्धा, संजमम्मि य वीरियं ॥ २ ॥

विभेपि जन्तो यदि दुःखराशे—
स्तदिन्द्रियार्थेषु रतिं कृथा मा ।
तदुद्भवं नश्यति शर्म यद् द्राक्,
नाशे च तस्य ध्रुवमेव दुःखम् ॥ ३ ॥

चित्तेऽपि यदि संसारान् मोक्षप्राप्तिं च काङ्क्षसि ।
तदेन्द्रियजयं कर्तुं, स्फोरय स्फारपौरुषम् ॥ ४ ॥

संसारम्मि असारे नत्थि सुहं वाहि वेअणापउरे ।
जाणंतो इह जीवो ण कुणइ जिणदेसिअं धम्मं ॥५॥

आत्मबुद्धिः शरीरादौ, यस्य स्यादात्मविभ्रमात् ।
बहिरात्मा स विज्ञेयो मोहनिद्रास्तचेतनः ॥ ६ ॥

बहिर्भावानतिक्रम्य, यस्यात्मन्यात्मनिश्चयः ।
सोऽन्तरात्मा मतस्तज्ज्ञैः, विभ्रमध्वान्तभास्करैः ॥ ७ ॥

निर्लेपो निष्कलः शुद्धो, निष्पन्नोऽत्यन्तनिर्वृतः ।
निर्विकल्पश्च शुद्धात्मा परमात्मेति वर्णितः ॥ ८ ॥

त्रीणि त्रीणि कुटुम्बानि, सर्वेषां सन्ति देहिनाम् । वै
तत्राद्यं क्षान्तिसन्तोषज्ञानसत्यशमादिकम् ॥ ९ ॥ रा

द्वितीयं क्रोधशोकार्तिमानमायाभयादिकम् । ग्य
तृतीयमङ्गं तद्धेतुर्नारी तत्कुलं तथा ॥ १० ॥ फ

आद्यं स्वाभाविकं तत्र, कुटुम्बमविनश्वरम् । ल
आविर्भावतिरोभाव—धर्मकं मोक्षदायकम् ॥ ११ ॥

औपाधिकं द्वितीयं च स्वाभाविकधिया धृतम् । ल
अनाद्यनन्तमभव्येषु भव्येष्वस्तादि सान्तवत् ॥ १२ ॥

आविर्भावतिरोभाव—धर्मकं भवकारणम् । ता
एकान्तादिनशीलं च, प्रत्याऽयोगनिप्रदम् ॥ १३ ॥

तृतीयं सादि सान्तं च, यादृच्छिकमुपाधिजम् ।
अतः कुटुम्बपोषेण, भवनिर्वाणकारणम् ॥ १४ ॥

वृक्षं क्षीणफलं त्यजन्ति विहगा, शुष्कं सरः सारसाः,
पुष्पं पर्युषितं त्यजन्ति मधुपा भ्रष्टं नृपं सेवकाः।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका, दग्धं वनान्तं मृगाः,
सर्वं स्वार्थवशाज्जनोऽभिरमते, न कस्य को वल्लभः ॥ १५ ॥

यावद्वित्तोपार्जनसक्त—स्तावन्निजपरिवारो रक्तः।
पश्चाज्जर्जरभूते देहे, वार्त्ता कोऽपि न पृच्छति गेहे ॥१६॥

पियपुत्तमित्तघरघरणिजाय,
इह लोइय सव्व नियसुहसहाय।
नवि अत्थि कोइ तुह सरणि मुक्ख,
इकल्लु सहसि तिरिनिरयदुक्ख ॥ १७ ॥

संगं नैव हि कश्चिदस्य कुरुते, सम्भाषतेऽनादरात्,
सम्प्राप्तो गृहमुत्सवेषु धनिनां, सावज्ञमालोक्यते।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया,
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ १८ ॥

वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय, कृशे कस्यास्ति सौहृदम् ॥ १९ ॥

ધર્મના હેતુઓ :—मानुष्यं शोभनो देशः, शुभा जातिः शुभं कुलम्।
सुरूपं दीर्घमायुष्य—मारोग्यं बुद्धिपाटवम् ॥ २० ॥
कल्याणमित्रसंसर्गं, पापमित्रविवर्जितम्।
सुश्रूषा सुश्रुतिश्चैव, सुकलत्रादिपरिच्छदः ॥ २१ ॥
अन्तरङ्गद्विषां मांद्य—मौदार्यं पापभीरुता।
सुनीतौ प्रीतिरित्याद्या, बहवो धर्महेतवः ॥ २२ ॥

પાપના હેતુઓ :—कुदेशः कुत्सितोवासः, कुजाति कुत्सिता गतिः।
कुशास्त्राणि कुमित्राणि, कुकलत्रादिपरिच्छदः ॥ २३ ॥

कुश्रुति कुमतिश्चैव, कुविद्या कुत्सितो गुरु ।
अत्यन्तमुत्कटो रागो द्वेषो मोहश्च कुग्रह ॥ २४ ॥
महारम्भो महादम्भो महालोभो महामद ।
कुनीती प्रीतिरित्याद्या बहवो पापहेतव ॥ २५ ॥
उत्थायोत्थाय चिन्त्यहि, किमद्य सुकृत कृत ।
आयुष्यखण्डमादाय सूर्यश्चास्तमय गत ॥ २६ ॥
करिष्यामि करिष्यामि करिष्यमीति चिन्तया ।
मरिष्यामि मरिष्यामि, मरिष्यामीति विस्मृतम् ॥ २७ ॥
अनर्घ्याण्यपि रत्नानि लभ्यन्ते विभवै सुखम् ।
दुर्लभो रत्नकोट्यापि, क्षणोऽपि मनुजायुष ॥ २८ ॥
मृत किमु प्रेतपति दुरामया गता क्षय किं नरकाश्च मुद्रिता।
ध्रुवा किमायुर्धनदेहबन्धवा, सकौतुको यद्विषयैर्विमुह्यसि ॥ २९ ॥
कार्य सपदि नानन्द, पूर्वपुण्यभिदे हि सा ।
सैवापदि विपादस्तु सा हि प्राक् पापविध्यये ॥ ३० ॥
एतद्धर्मस्य सर्वस्वम् शेषो वचनविस्तर ।
परेषा तन्नकर्तव्य यदात्मनि न रोचते ॥ ३१ ॥
रागी बध्नाति कर्माणि, वीतरागो विमुच्यते ।
जना जिनोपदेशोऽय, सक्षेपाद्बन्धमोक्षयो ॥ ३२ ॥
आपदा कथित पन्था इन्द्रियाणामसयम ।
तज्जय सम्पदा मार्गो, येनेष्ट तेन गम्यता ॥ ३३ ॥
धम्मुज्जमति सत्ती जइ जिय तुह नत्थि ता इ किर ताव,
अप्पाण झुरतो, मा विरमसु तहवि कइयावि ।
पर्णं वि नीपग क्यावि धम्मुज्जमोऽयि तुह होज्जा
अनह दुरसयतुडो पाघले जासि सत्तमय ॥ ३४ ॥

जं आसि धम्मवीयं, पुव्वभवे वाविअं तए जीव ।
तं इह लुणासि संपइ, वावियमिण्हं लुणसि अग्गे ॥ ३५ ॥

वाहुल्लेणं लोओ पिच्छइ, नयणेहिं नेव हियएणं ।
तेणं विसएहिंतो, कह विरत्तो कुणउ धम्मम् ॥ ३६ ॥

संसारानित्यतां बुध्वा, ये तिष्ठन्ति निराकुला ।
ते नूनं वह्निना दिप्ते, शेरते निर्भर गृहे ॥ ३७ ॥

गतानुगतिको भूत्वा, मा त्वं स्वपिहि निर्भरम् ।
पतन्तं वीक्ष्य कूपेऽन्धं, सज्ञाक्षस्तत्र किं विशेत् ॥ ३८ ॥
शृण्वन्तोऽपि न शृण्वन्ति, जानन्तोऽपि न जानते ।
पश्यन्तोऽपि न पश्यन्ति, धर्मतत्त्वं भवे रता ॥ ३९ ॥
संसारनाटकं स्पष्ट सर्वं, पश्यत्युत्फुल्ल लोचनः,
स्वदेहनाटकं स्पष्टं कश्चिन्नेक्षत मूढधीः ।
बाल्यतारुण्यवृद्धत्व, हास्यरोदनखेदनम्,
विषादानन्दक्रोपादि, कोटिश पश्य कौतुकम् ॥ ४० ॥
गेहं जर्जरमाखुभिः कृताविलं, चेलं च यूकालयं,
शय्यामत्कुणसंकुला वपुषि रुग्, रुक्षासनं भोजनम् ।
वृत्तिर्भारवहादिका परुषवाग्, जाता कुरुपा वधू—
र्यस्येत्थं ननु सोऽपि नोज्झति गृहासंगं हहा मूढधी ॥ ४१ ॥
गृहेन्नमात्रदौर्लभ्यं, लभ्यन्ते मोदका व्रते ।
वैराग्यस्यायमर्थोऽहि दुःखगर्भस्य लक्षणम् ॥ ४२ ॥
अप्पे खित्ते काले, जीवे भावे अ संपयालाहे ।
विग्घाइकमे लब्भइ, जो धम्मो भयह तं सिवयं ॥ ४३ ॥

## ॐ सामान्योपदेशक ॐ

जिनेन्द्रपूजा गुरुपर्युपास्ति, सत्वानुकम्पा शुभपात्रदानम् ।
गुणानुरागः श्रुतिरागमस्य नृजन्मवृक्षस्य फलान्यमूनि ॥ १ ॥

त्रैकाल्य जिनपूजन प्रतिदिन सङ्गस्य सन्माननम्,
स्वाध्यायो गुरुसेवन च विधिना दान तथावश्यकम्।
शक्त्या च व्रतपालन वरतपो ज्ञानस्य पाठस्तथा,
सैष श्रावक पुङ्गवस्य कथितो धर्मो जिनेन्द्रागमे ॥ २॥

देवापूजा गुरूपास्ति, स्वाध्याय संयमस्तथा।
दान चेति गृहस्थाना, षट्कर्माणि दिने दिने ॥ ३ ॥

तत्थ तुमे पुव्वह्णे, पाणपि नो चेव ताव पायव्व।
नो जाव चेइयाइ साहू वि य वंदिया विहिणो ॥ ४ ॥

न देवपूजा न च पात्रपूजा न श्राद्धधर्मश्च न साधुधर्म।
लब्ध्वापि मानुष्यमिद समस्त कृत मयारण्य विलापतुल्य ॥५॥

जत्थऽत्थि चेइयाइ, जत्थ य साहूहिं होइ संजोगो।
जत्थऽन्ने साहम्मी, तत्थ निवेसे वसइ सड्ढो ॥ ६ ॥

बाल प्राय रमणासक्त-स्तरुण प्राय रमणीरक्त।
वृद्ध प्रायश्चिन्तामग्नस्तदहो धर्मे कोऽपि न लग्न ॥ ७ ॥

पुण्यात्ट पौषधागार तत्रैत्य श्राद्धको जन।
व्रतादिपण्य क्रीणाति क्रमेणानन्तलाभदम् ॥ ८ ॥

शतेषु जायते शूर सहस्रेषु च पण्डित।
वक्ता शतसहस्रेषु दाता भवति वा न वा ॥ ९ ॥

न रणे निर्जिते शूरो विद्यया न च पण्डित।
न वक्ता वाक्पटुत्वेन, न दाता धनदायक ॥ १० ॥

इन्द्रियाणा जये शूरो धर्म चरति पण्डित।
सत्यवादी भवेद्वक्ता दाता भीता भयप्रद ॥ ११ ॥

थावर जगम चेव धण धन्न उवक्खरम्।
पच्चमाणस्स कम्मेहिं नालं दुक्खाओ मोअणे ॥ १२ ॥

जे पावकम्मेहिं धणं मणूसा, समाययंति अमइं गहाय ।
पहाय ते पास पयट्टिए नरे, वेराणु वद्धा नरयं उवंति ॥१३॥
उ. सूत्र अ. ४. सू २.

मन एव मनुष्याणां, कारणं बन्धमोक्षयोः ।
यथैवालिङ्गयते भार्या, तथैवालिङ्गयते स्वसा ॥ १४ ॥

मणमरणे इंदियमरणं, इंदिय मरणे मरंति कम्माइं ।
कम्ममरणेन मुक्खो, तम्हा मणमारणं विंति ॥ १५ ॥

मन संवृणु हे विद्वन्नसंवृतमनायत. ।
याति तन्दुलमत्स्यो द्राक्, सप्तमीं नरकावनीम् ॥ १६ ॥

वायाए कायेणं मणरहियाणं न दारुण कम्मं ।
जोयग सहस्समाणो, मुच्छिममच्छोउयाहरणम् ॥ १७ ॥

वयकाय विरहियाणवि, कम्माणं चेत्तमेत्तविहियाणं ।
अइघोरं होइ फलं तदुलमच्छोव्व जीवाण ॥ १८ ॥

साहूण सावगाण य, धम्मो जो कोइ वित्थरो भणिओ ।
सो मण णिग्गहसारो, ज फलसिद्धीतओ भणिया ॥ १९ ॥

जीअ अज्ज अह क्ले परलोए तुह पवयण होही ।
दीह संसारकए निरंकुसं कह मणं कुणसि ॥ २० ॥

मूलं साहपसाहा, गुच्छफले भूमिपडिय भक्खणया ।
सव्वं माणुस पुरिसे, साउह झुज्झ त धणहरणम् ॥ २१ ॥

यादशी जायते लेश्या समयेऽन्त्ये शरीरिण.
तादृश्येव भवेल्लेश्या प्रायस्तस्यान्यजन्मनि ॥ २२ ॥

किन्हाए जाइ निरयं, नीलाए थावरो नरो होइ ।
कावोयाए तिरियं पीयाए माणुसो जम्मो ॥ २३ ॥
पम्हाए देवलोए सुक्काए जाव सासयं ठाणम् ।
इय लेसा वियारो णायव्वो लेसओ जम्हा ॥ २४ ॥

ज्वरोष्णदाहभयशोक तृष्णा कण्डुक्षुभूक्षा अपि पारवश्यम् ।
शीत पुनर्नारकीणामतीव दशप्रकारा प्रभवति पीडा ॥२५॥
दुर्गन्धतो यदणुतोऽपि पुरस्य मृत्यु—
रायूंषि सागरमितान्यनुपक्रमाणि,
स्पर्श खरक्रकचतोऽतितमामितश्च,
दुःखावनन्तगुणितौ भृशशैत्यतापौ ।
तीव्रा व्यथा सुरकृता विविधाश्च यत्रा—
क्रन्दारवै सततमभ्रभृतोऽप्यमुष्मात्
किं भाविनो न नरकात् कुमते बिभेषि
यन्मोदसे क्षणसुखैर्विषय कषायै ॥ २६ ॥
रोगाण कोडीओ हवति पचेव लक्खअडसट्ठी ।
नवनवइ सहस्साइ पचसया तहय चुलसीइ ॥ २७ ॥
(सातभीमा)

ज नरये नेरइया दुहाइ पावति घोरणताइ ।
तत्तो अणतगुणिअ णिगोअमज्झे दुह होइ ॥ २८ ॥
सूईहि अग्गिवण्णाहि सभिन्नस्स निरन्तरम् ।
जावइअ गोअमा दुक्ख, गब्भे अट्ठगुण तओ ॥ २९ ॥
ते गतास्ते गमिष्यन्ति ते गच्छन्ति पर पदम् ।
आरुह्य निरपाय ये नमस्कारमहारथम् ॥ ३० ॥
बारसगुणा अरिहता सिद्धा अट्ठेव सूरि छत्तीस ।
उवज्झाया पणवीस साहू सगवीस अट्ठसयम् ॥ ३१ ॥
छव्वय छकायरक्खा पचेन्दि लोह निग्गहो खति ।
भावसुद्धी पडिलेहणाइ करणे विसुद्धि य ॥ ३२ ॥
सजमजोए जुत्तो अकुसलमणवयणकाय सरोहो ।
सीआइ पीडसहण च मरण उवसग्ग सहण च ॥ ३३ ॥

जोए करणे सन्ना इन्दिय भोमाइ समणधम्मे अ ।
३ ३ ४ ५ १० १०
सीलग सहस्साणं, अट्ठारगस्स निप्फत्ती ॥ ३४ ॥

पञ्चाश्रवाद्विरमणं. पञ्चेन्द्रियनिग्रह कषाय जयः ।
दण्डत्रयविरतिश्चेति, संयमः सप्तदशभेदः ॥ ३५ ॥

(ચરણસિત્તરી)

वय-समण-धम्म-संजम-वेयावच्चं च वंभगुत्तीओ ।
५ १० १७ १० ९
नाणाइतियं तव कोहनिग्गहाइं चरणमेअम् ॥ ३६ ॥
१२

(કરણ સિત્તરી)

पिंडविसोही समिई भावण पडिमाय इंदियनिग्गहो ।
४ ५ १२ ५
पडिलेहण गुत्तीओ अभिग्गहो चेव करणं तु ॥ ३७ ॥
२५ ४ ४

લોકસ્વરૂપ

लोए असंखजोयणमाणे, पइजोयणंगुलासंखा ।
पइत अखख अंसा, पइ अंसमसंखा गोला ॥ ३८ ॥

गोले असंखनिगोओ, सोऽणंत जीओ जीअं पइपएसो ।
असंख पईपएसं, कम्माणं वग्गणाऽणंता ॥ ३९ ॥

पईवग्गणं अणता, अणूय पइअणू अणंत पज्जया ।
एयं लोगसरूवं, भाविज्ज तहत्ति जिणवुत्तं ॥ ४० ॥

गोलाय असंखिज्जा, असंखनिगोयओ हवइ गोलो ।
इक्किक्कंमि निगोए अणंत जीवा मुणेयव्वा ॥ ४१ ॥

अद्दामलगपमाणे पुढवीकायंमि हुंति जे जीवा ।
ते पारेवयमित्ता जंबूदीवे न मायंति ॥ ४२ ॥

पगमि उदगबिंदुमि जे जीवा जिणवरेहिं पन्नत्ता ।
ते जइ सरसवमित्ता जबूदीवे न मायति ॥ ४३ ॥

त्रिभिर्वर्षै त्रिभिर्मासै त्रिभि पक्षैस्त्रिभिर्दिनै ।
अत्युग्रपुण्यपापानामिहैव लभते फलम् ॥ ४४ ॥

दुष्टाना दुर्जनाना च पापिनाम् क्रूरकर्मणा ।
अनाचार प्रवृत्ताना पाप फलति तद्भवे ॥ ४५ ॥

अगीयत्थस्स वयणेण, अमियपि न घुट्टये ।
गीयत्थस्स वयणेण, विस पावे हलाहलम् ॥ ४६ ॥

सर्व परस्य पश्यन्ति, वालाग्रादपि तनूनि छिद्राणि ।
नात्मगतानि पश्यन्ति, हिमगिरिशिखरप्रमाणानि ॥४७॥

वर हि नरके वासो, धर्महीने कुले न तु ।
नरकात् क्षीयते पापमितरस्माच्च वर्धते ॥ ४८ ॥

साधुभ्य साधुदान रिपुजनसुहृदा चोपकार कुरु त्वम्,
सौजन्य बन्धुवर्गे निजहितमुचित स्वामिकार्य यथार्थम् ।
श्रोत्रे ते तथ्यमेतत् कथयति सतत लेखिनी भाग्यशालिन्,
नोचेन्नष्टेऽधिकारे मम मुखसदृश तावकास्य भवेद्धि ॥४९

धर्मकृत्येषु सार हि, वैयावृत्य जगुर्जिना ।
तत्पुनर्ग्लान नवन्धि, विना पुण्य न लभ्यते ॥ ५० ॥

ग्राम नास्ति कुत सीमा भाया नास्ति कुत सुत ।
प्रज्ञा नास्ति कुतो विद्या धर्मो नास्ति कुत सुखम् । ५१

हस्तस्य भूषण दान, सत्य कण्ठस्य भूषणम् ।
कर्णस्य भूषण शास्त्र, भूषणे किं प्रयोजनम् ॥ ५२ ॥

पाद पवित्र यदि तीर्थगमन, हस्त पवित्र यदि दानपुण्यम् ।
मुख पवित्र जिनराज-नामहृदय पवित्र यदि ज्ञानसारम् ॥५३

गीते नादे पठे वादे, संग्रामे श्वशुरगृहे ।
आहारे व्यवहारे च, लज्जामग्रस्तु न कुर्यात् ॥ ५४ ॥

यन्त्रमेको द्वयोर्मन्त्र, त्रिभिर्गीतं चतु: पथं ।
कृषिं च पञ्चभिः कुर्यात्, संग्रामो बहुभिर्जनैः ॥ ५५ ॥

व्याकरणात्पदसिद्धि:, पदसिद्धेरर्थनिर्णयो भवति ।
अर्थात् तत्त्वज्ञानं तत्वज्ञानात्पर श्रेय: ॥ ५६ ॥

जले तैलं खले गुह्य, पात्रे दानं मनागपि ।
प्राज्ञे विद्या स्वयं याति, विस्तार वस्तुशक्तित: ॥ ५७ ॥

आत्मन्मोहतमस्तिरस्कृतमते कृत्वा पुरस्त्वामहो,
धूर्ताः सन्ततमिन्द्रियादय इमे पुष्णान्त्यभीष्ट निजम् ।
मूढ त्वं पुनरेक एव नरके सोढासि वाढं दृढं,
छेदास्फोटनशाटनादि तदरे वाचां न यद् गोचरम् ॥ ५८ ॥

स्याच्छिशुत्वे मातृमुख—स्तारुण्ये तरुणीमुखः ।
वृद्धभावे पुत्रमुखो, मूर्खो नान्तर्मुखः कदाचित् ॥ ५९ ॥

धर्मस्य फलमिच्छन्ति धर्मं नेच्छन्ति मानवा: ।
फलं पापस्य नेच्छन्ति, पाप कुर्वन्ति सादरा ॥ ६० ॥

यत्नेन पापानि समाचरन्ति, धर्म प्रसङ्गादपि नाचरन्ति ।
आश्चर्यमेतद्धि मनुष्यलोके, क्षीरं परित्यज्य विषं पिबन्ति ॥६१

अर्त्ता देवान्नमस्यन्ति, तप कुर्वन्ति रोगिणः ।
निर्धना विनयं यान्ति, वृद्धा: स्युः शीलशालिनः ॥ ६२ ॥

धर्माख्याने श्मशाने च, रोगिणां या मतिर्भवेत् ।
सा यदि निश्चला बुद्धि:, को न मुच्येत बन्धनात् ॥६३॥

पुण्य: कुरुते पाप, बन्धुनिमित्तं वपुर्निमित्तं वा ।
वेदयते तत् सर्वं, नरकादौ पुनरसावेकः ॥ ६४ ॥

आत्मसुखार्थं क्रियते भोग पश्चादेव शरीरे रोग
रोगे जाते मरण शरण तदपि न मुञ्चति पापाचरणम् ॥६५

अवराण रसणी कम्माण मोहणी वयाण तह चेव बम्भवयण।
गुत्तीण य मणगुत्ती, चउरो दुक्खेहि झिप्पति ॥ ६६ ॥

आत्मान रथिन विद्धि, शरीर रथमेव तु ।
बुद्धि तु सारथि विद्धि, मन प्रग्रहमेव च ॥ ६७ ॥

य प्राप्य मानुष जन्म, दुलभ भवकोटिभि ।
धर्मशर्मकर कुर्यात् सफल तस्य जीवितम् ॥ ६८ ॥

देहे द्रव्ये कुटुम्बे च सवससारिणा रति ।
जिने जिनमते सङ्घे पुनर्मोक्षाभिलाषिणाम् ॥ ६९ ॥

यथा ह्येकेन चक्रेण, न रथस्य गतिर्भवेत् ।
एव पुरुषकारेण, विना दैव न सिध्यति ॥ ७० ॥

किं रूपेण धनेन धान्यनिचयैर्देहस्य सद्भूषणै,
पाण्डित्येन भुजाबलेन महता वाचा पटुत्वेन च ।
जात्याप्युत्तमया कुलेन शुचिना शुभ्रैर्गुणानां गणै,
आत्मा चेन्न विमोचितोऽतिगहनात् ससारकारागृहात् ॥७१

अहो मूढ ! जगत् सव भ्राम्यत्येतद्बहिर्बहि ।
आकुलव्याकुल नित्य, विषिमाश्रित्य धावति ॥ ७२ ॥

माता पिता स्व सुगुरुश्च तत्वात्,
प्रबोध्य यो योजति शुद्धधर्म ।
न तत्समोऽरि क्षिपते भवाब्धौ,
यो धर्मविघ्नादिकृतेश्च जीवम् ॥ ७३ ॥

स एव हि बुधै पूज्यो गुरुश्च जनकोऽपि च ।
शिष्य सुत च य क्वापि, नैवोन्मार्गं प्रवर्तयेत् ॥ ७४ ।

अगस्तितुल्याश्च घृताब्धिशोषणे,
दम्भोलितुल्या वटकाद्रिभेदने ।
शाकावलीकाननवह्नि तुल्या—
स्स एव भट्टा इतरे भटाश्च ॥ ३ ॥

राजा राजानमालोक्य, वैद्यो वैद्यं नटो नटम् ।
भिक्षुको भिक्षुकं दृष्ट्वा, श्वानवद् घुर्घुरायते ॥ ४ ॥

उष्ट्रकाणां विवाहे तु, गर्दभा वेदपाठका· ।
परस्पर प्रशंसन्ति, अहो रूपं अहो ध्वनिः ॥ ५ ॥

घट भिन्द्यात् पटं छिन्द्यात्, कुर्याद् रासभरोहणं ।
येन केन प्रकारेण, प्रसिद्ध· पुरुषो भवेत ॥ ६ ॥

एष वन्ध्यासुतो याति, खपुष्पकृतशेखरः ।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥ ७ ॥

कोटं च बुटं च पटलुनं कौश्वं,
मुखे च धुम्र सिगरेट पिबन्तम् ।
घडी छडी गन्धलवंडरं च
जानन्ति सर्वे कुलधर्ममेवम् ॥ ८ ॥

कदाचिदेते तरुणा व्रजेयु –
र्मां दुर्गति मद्वदनं निरीक्ष्य ।
इति कृपातः प्रमदाजनोऽय
मुखे पटाच्छादनमातनोति ॥ ९ ॥

ददतु ददतु गालीर्गालिमन्तो भवन्तो,
वयमिह तदभावाद् गालिदानेऽसमर्थाः ।
जगति विदितमेतद्दीयते विद्यमानं,
न तु शशकविषाणं कोऽपि कस्मै ददाति ॥ १०

न जारजातस्य ललाटशृङ्गं, कुलप्रसूते न च पाणिपद्म ।
यदा यदा मुञ्चति वाक्यवाण, तदा तदा तस्य कुलप्रमाणम् ॥११

परोपदेशे कुशला, दृश्यन्ते वहवो नरा ।
वञ्चनास्ति वाचना न, फोनोग्राफनिदर्शनम् ॥ १२ ॥

पूर्वजन्मनि पूतत्वात् जारत्वादिह जन्मनि ।
अस्तित्वाद् देवपूजाया पुजारीत्यभिधीयते ॥ १३ ॥

पुरीषस्य च रोषस्य, हिंसायास्तस्करस्य च ।
आद्याक्षराणि सगृह्य वेधाश्चक्रे पुरोहितम् ॥ १४ ॥

वड़ो धोती वड़ो पोथी पण्डितो पगड़ो वड़ो ।
अक्षरार्थे गतिर्नास्ति, हा जी हा जी पुन पुन ॥ ११ ॥

चत्वारि खलु कर्माणि, सन्ध्याकाले विवर्जयेत् ।
आहार मैथुन निद्रा, स्वाध्याय च विशेषत ॥ १६ ॥
आहाराज्जायते व्याधि क्रूरगर्भश्च मैथुनात् ।
निद्रातो धननाश स्यात् स्वाध्याये मरण भवेत् ॥ १७ ॥
शत विहाय भोक्तव्य, सहस्र स्नानमाचरेत् ।
लक्ष विहाय दातव्य कोटिं त्यक्त्वा प्रभु भजेत् ॥ १८ ॥

बुद्धे फल तत्त्वविचारणं च देहस्य सार व्रतधारण च ।
अर्थस्य सार किल पात्रदान, वाच फल प्रीतिकर
नराणाम् ॥ १९ ॥

सा विद्या या मद हन्ति, सा श्रीयार्थिषु दीयते ।
धर्मानुसारिणी या च, सा बुद्धिरभिधीयते ॥ २० ॥

बालादपि हित ग्राह्य—ममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमा विद्या स्त्रीरत्न दुष्कुलादपि ॥ २१ ॥
दान वित्तादृत वाच कीर्तिधर्मौ स्तथायुष ।
परोपकरण कायाद-सारात्सारमुद्धरेत् ॥ २२ ॥

अनन्तपारं किल शब्दशास्त्रं,
स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु,
हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ २३ ॥

यौवनं धनसम्पत्ती, प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय, किं पुनस्तच्चतुष्टयम् ॥ २४ ॥

मत्तस्तु मदिरामत्तः प्रमत्तो धनगर्वित· ।
उन्मत्तः स्त्रीमदान्धश्च, मदत्रयमुदाहृतम् ॥ २५ ॥

स्त्रीणां श्रीणां च ये वश्या–स्तेऽवश्यं पुरुषाधमा ।
स्त्रिय श्रियश्च यद्वश्या–स्तेऽवश्य पुरुषोत्तमा ॥ २६ ॥

प्राणान्तेऽपि न भङ्क्तव्य, गुरुसाक्षीकृतं व्रतम् ।
व्रतभङ्गोऽतिदुःखाय, प्राणा जन्मनि जन्मनि । २७ ॥

आजन्मं जं पावं, बंधइ मिच्छत्तसज़ुओ कोई ।
वयभंग काउमाणो, बंधइ त चेव अट्ठगुणं ॥ २८ ॥

अन्यलिङ्गकृतं पापं, जिनलिङ्गेन शुध्यति ।
जिनलिङ्गकृतं पापं, वज्रलेपोपमं मतम् ॥ २९ ॥

राजदण्डभयात् पापं, नाचरत्यधमो जनः ।
परलोकभयाद् मध्यः, स्वभावदेव चोत्तमः ॥ ३० ॥

उपेक्षते समर्थोऽपि, यः प्रभुपापचेष्टितम् ।
बध्यते सोऽपि तत्कर्म, कियद्भागानुसङ्गतः ॥ ३१ ॥

चक्की विसइ भाग सव्वेवि य केशवा दसइ भागे ।
मडलिआ छ भागं, आयरिआ अद्धमद्धेण ॥ ३२ ॥

दानेन तुल्यो निधिरस्ति नान्यो,
लोभाच्च नान्यो रिपुः पृथिव्याम् ।

विभूषण शीलसम न चान्यत्,
सतोपसम सुखमस्ति नान्यत् ॥ ३३ ॥

क्षान्तितुल्य तपो न स्ति, सतोषा न पर सुखम् ।
नास्ति विद्यासमो बन्धु—न च धर्मो दयापर ॥ ३४ ॥

पठतो नास्ति मूर्खत्व, जपतो नास्ति पातकम् ।
मौनिन कलहो नास्ति, न भय चास्ति जाग्रत ॥३५॥

काक पक्षिषु चाण्डाल, स्मृत पशुषु गर्दभ ।
नराणा कोऽपि चाण्डाल, स्मृत सत्पु निन्दक ॥३६॥

पक्षिणा वायसो धूर्त्त श्वापदेषु च जम्बुक ।
नरेषु द्यूतकारश्च नारीषु गणिका पुन ॥ ३७ ॥

नराणा नापितो धूर्त्त पक्षिणा चैव वायस ।
चतुष्पदा शृगालस्तु, स्वेच्छाचारी तपस्विनाम् ॥३८॥

विभवो वीनसङ्गाना, वैदग्ध्य कुलयोषिताम् ।
दाक्षिण्य वणिजा प्रेम वेश्यानाममृत विषम् ॥ ३९ ॥

विद्युल्लता चञ्चलताश्रयाणा,
स्त्रीणा नृपाणामथ दुर्जनानाम् ।
स्वार्थप्रियाणा परवञ्चकाना
कुर्वीत विश्वासमहो न धीमान् ॥ ४० ॥

अभ्रच्छाया तणाग्निश्च, खले प्रीति स्थले जलम् ।
वेश्यासक्ति कुमित्र च षडेते बुद्बुदोपमा ॥ ४१ ॥

नारा नदी नरेन्द्राणा नागाना च नियोगिना ।
नखिना च न विश्वास, कर्त्त व्य श्रियमिच्छता ॥४२॥

वेश्याका नृपतिश्चौरो नीरमाजारदृष्टिण ।
जातवेदा कलादश्च, न विश्वास्या इमे कदाचित् ॥ ४३ ॥

त्रय स्थानं न मुञ्चन्ति, काकाः कापुरुषा मृगा ।
अपमाने त्रयो यान्ति, सिंहाः सत्पुरुषा गजा ॥ ४४ ॥

सहोदरव्यथा पञ्च, दरिद्रस्यानुजीविनः ।
ऋण दौर्भाग्यमालस्य, बुभुक्षापत्यसंतति ॥ ४५ ॥

पूआ पच्चक्खाणं, पडिक्कमण पोसहो परोवयारो ।
पच पयारा जस्स उ, न पयारो तस्स संसारे ॥ ४६ ॥

वैर वैश्वानर व्याधिः, वादव्यसनलक्षणा ।
महानर्थाय जायन्ते, वकारा पञ्च वर्धिताः ॥ ४७ ॥

जामाता जठर जाया, जातवेदा जलाशय ।
पूरिता नैव पूर्यन्ते, जकाराः पञ्च दुर्भरा ॥ ४८ ॥

जामाता कृष्णसर्पश्च, नापितो दुर्जनस्तथा ।
उपकारैर्न गृह्यन्ते, पञ्चमो भोगिनेयक ॥ ४९ ॥

बालको दुर्जनश्चौरो, वैद्यो विप्रश्च पुत्रिका ।
अर्थि नृपोऽतिथिर्वेश्या, न विदु सदसद्दशाम् ॥ ५० ॥

पुत्रश्च मूर्खो विधवा च कन्या,
शठं च मित्रं चपलं कलत्रं ।
विलासकालेऽपि दरिद्रता च,
विनाग्निना पञ्च दहन्ति देहम् ॥ ५१ ॥

अग्निर्विप्रो यमो राजा, समुद्र उदरं स्त्रिय ।
अतृप्ता नैव तृप्यन्ति, याचन्ते च दिने दिने ॥ ५२ ॥

व्याघ्रे च महदालस्य, सर्पे चैव महद्भयम् ।
पिशुने चैव दारिद्र, प्रेतेन जीवन्ति जन्तवः ॥ ५३ ॥

पिण्डे पिण्डे मतिर्भिन्ना, कुण्डे कुण्डे नवं पयः ।
जातौ जातौ नवाचारा, नवा वाणी मुखे मुखे ॥ ५४ ॥

पदे पदेऽधिगम्यन्ते पापभाजो न चेतरे ।
भूयांसो वायसा सन्ति स्तोका यच्चापपक्षिण ॥५६॥

पापर्धी द्रुतमभ्येति बहूपायैश्च धर्मधी ।
वस्त्रे स्यात्कालिमा सद्य, शोणिमा भूरिभिर्दिनै ॥ ५६ ॥

क्षते प्रहारानिपतन्त्यभीक्ष्ण धान्यक्षये वर्धते जाठराग्नि ।
आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥५७

कन्या वरयते रूप, माता वित्त पिता श्रुतम् ।
बान्धवा कुलमिच्छन्ति, मिष्टान्नमितरे जना ॥ ५८ ॥

विना द्रव्यादिधमाढ्ये, कुले रक्ता वर सुता ।
निसर्ग सुलभो यमात्, त विना च चिरापद ॥ ५९ ॥

उद्यम खलु कर्तव्य फल मार्जारवद् भवेत् ।
जन्मप्रभृति गौर्नास्ति, पय पिबति नित्यश ॥ ६० ॥

न निमित्तद्विषा क्षेमो, न चायुर्वैद्यकद्विषाम् ।
न श्री नीतिद्विषा धर्म—द्विषामेतत् त्रयं तु न ॥ ६१ ॥

परनिन्दासम पाप, न भूत न भविष्यति । -
आत्मनिन्दासम पुण्य न भूत न भविष्यति ॥ ६२ ॥

पाषाणेषु यथा हेम दुग्धमध्ये यथा घृतम् ।
तिलमध्ये यथा तैल देहमध्ये तथा जीव ॥ ६३ ॥

वैरूप्य व्याधिपिण्ड स्वजनपरिभव कार्यकालातिपातो,
विद्वेषो ज्ञाननाश स्मृतिमतिहरण विप्रयोगश्च सद्भि ।
पारुष्य नीचसेवा कुलबलतुलना धर्मकामार्थहानि
कष्टमो षोडशैते निरुपचयकरा मद्यपानस्य दोषा ॥६४॥

देवनिन्दा च दारिद्र गुरुनिन्दा च नारकी ।
शास्त्रनिन्दा भवेन्मूर्खो धर्मनिन्दा कुलक्षय ॥ ६५ ॥

यथा धेनुसहस्रेषु, दुग्धं भवति एकधा ।
तथा धर्मसहस्रेषु, तत्त्वं भवति एकधा ॥ ६६ ॥

प्रत्यक्षे गुरवः स्तुत्या, परोक्षे मित्रबान्धवाः ।
कर्मान्ते दासभृत्याश्च पुत्रा नैव मृताः स्त्रियः ॥ ६७ ॥

लालयेत् पञ्चवर्षाणि, दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे, पुत्रं मित्रवदाचरेत् ॥ ६८ ॥

धर्मार्थं यस्य वित्तेहा, वरं तस्य निरीहता ।
प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम् ॥ ६९ ॥

આ. ભા          આ કા.          મા. પો.
वर्षासु लवणममृतं, शरदि जलं गोपयश्च हेमन्ते ।
મ ફા          ચૈ વૈ          જે. અ
शिशिरे चामलकरसो, घृतं वसन्ते गुडश्चान्ते ॥ ७० ॥

टंकच्छेदे न मे दुःखं, न दाघे न च घर्षणे ।
एतदेव महद्दुःखं, गुञ्जया सह तोलनम् ॥ ७१ ॥

अनुचितकर्मारम्भ, स्वजनविरोधो बलीयसी स्पर्धा ।
प्रमदाजनविश्वासो, मृत्युद्वाराणि चत्वारि ॥ ७२ ॥

मित्रद्रोही कृतघ्नश्च, ये च विश्वासघातकाः ।
उलं सिञ्चामि तद् भोजः चाण्डालीवचन यथा ॥७३॥

पुत्रः स एव शिष्यस्तु, यः पितृगुरुवत्सलः ।
निर्वापयति संतापं, शेषस्तु कृमिकीटकः ॥ ७४ ॥

मूर्खस्य पञ्चचिह्नानि, गर्वी दुर्वचनी तथा ।
हठी चाप्रियवादी च, परोक्तं नैव मन्यते ॥ ७५ ॥

यः स्वभावो हि यस्यास्ति, स नित्यं दुरतिक्रमः ।
श्वा यदि क्रियते राजा, तत्किं नाश्नात्युपानहम् ॥ ७६ ॥

उपेक्ष्य लोष्टक्षेप्तार, लोष्ट दशति मण्डल ।
मृगारि शरमुत्प्रेक्ष्य शरक्षेप्तारमृच्छति ॥ ७७ ॥

अपकर्त्ता यथा पूज्यो नोपकर्त्ता तथा जने ।
अच्यते नो जगत्कर्त्ता, सहता सर्वतो हर ॥ ७८ ॥

कुमन्त्रै पच्यते राजा फल कालेन पच्यते ।
लङ्घनै पच्यते ताप पापी पापेन पच्यते ॥ ७९ ॥

वैद्यो गुरुश्च मन्त्री च, यस्य राज्ञ प्रियवदा ।
शरीरधर्मकोशेभ्य क्षिप्र स परिहीयते । ८० ॥

सद्भिस्तु लील्या प्रोक्त, शीलालिखितमक्षरम् ।
असद्भिस्तु सपथेनापि, जले लिखितमक्षरम् ॥ ८१ ॥

नि सारस्य पदार्थस्य, प्रायेणाडम्बरो महान् ।
न हि स्वर्णे ध्वनिस्तादृग्, यादृक्कास्ये प्रजायते ॥ ८२ ॥

यथा बिन्दुनिपातेन क्रमश पूर्यते सर ।
स हेतु सर्वविद्याना धर्मस्य च धनस्य च ॥ ८३ ॥

आपदो महतामेव, महतामेव सम्पद ।
हीयते वर्धते चन्द्रो न तु तारागण क्वचित् ॥ ८४ ॥

दिनमेक शशी पूर्ण क्षीणस्तु बहुवासरान् ।
सुखादु ख सुराणाम—प्यधिक का कथा नृणाम् ॥ ८५ ॥

गेही वर नैव कुशीललिङ्गी मुर्खो वर मा विबुध प्रमादी ।
अन्धो वर मा परवित्तदृष्टि, मुको वर मा वदुकूटभाषी ॥८६

वर मौन काय न च वचनमुक्त यदनृतम्,
वर क्लैव्य पुसा न च परकलत्राभिगमनम् ।
वर प्राणत्यागो, न च पिशुनवाक्येष्वभिरुचि
वर भिक्षाशित्व न च परधनास्वादनसुखम् ॥८७

प्रवर्धमानः पुरुषस्त्रयाणामुपघातक· ।
पूर्वोपार्जितमित्राणां. दाराणामथ वेश्मनाम् ॥ ८८ ॥

अज्ञानी निन्दति ज्ञानं, चौरा निन्दन्ति चन्द्रमा· ।
अधमा धर्मं निन्दन्ति, मुर्खा निन्दन्ति पण्डितान् ॥ ८९ ॥

अजीर्णं तपस· क्रोधो, ज्ञानाजीर्णमहङ्कृति ।
परतप्ति· क्रियाजीर्णं, अन्नाजीर्णं विसूचिका ॥ ९० ॥

सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते,
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिसम्पुटगतं तज्जायते मौक्तिकं,
प्रायेणाधममध्यमोत्तमगुण संसर्गतो जायते ॥ ९१ ॥

स्तोकोऽपि गुणिसंपर्क, श्रेयसे भूयसे भवेत् ।
लवणेन किमल्पेन, स्वादु नान्नमजायत ॥ ९२ ॥

सत्यं ब्रूयात् प्रियं ब्रूया—न्न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयात्, एष धर्म· सनातन· ॥ ९३ ॥

प्रियवाक्यप्रसादेन, सर्वे तुष्यन्ति जन्तव· ।
तस्मात्तदेव वक्तव्यं, वचने का दरिद्रता ॥ ९४ ॥

हस्ती स्थूलतनु· स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशः,
वज्रेणाभिहता· पतन्ति गिरयः किं शैलमात्रः पविः ।
दीपे प्रज्वलिते विनश्यति तम किं दीपमात्रं तम·,
तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥९५॥

निष्पुण्यास्ते जना जैनं, धर्मं ये न हि जानते ।
ते निष्पुण्यतमा ये तु, जानन्तोऽपि न तन्वते ॥ ९६ ॥

शरीरं श्लथते नाशा· सेरूपं याति न पापधी· ।
जरा स्फुरति न ज्ञानं, धिक् स्वरूपं शरीरिणाम् ॥९७॥

एगो साहु एगाय साहुणी सावओ वि सड्ढी वा ।
आणा जुत्तो सघो सेसो पुण अट्ठीसघाओ ॥ ९८ ॥

अतिपरिचयादवज्ञा, भवति विशिष्टवस्तुनि प्राय ।
लोक प्रयागवासी कूपे स्नान सदा कुरुते ॥ ९९ ॥

कच्छप कुरुते वाञ्छा यदि स्यात् कम्मो गुट ।
मण्डकार्यमिनीपत्राण्यभ आत्य तदाद्म्यहम् ॥ १०० ॥

बौद्धानामृजुसूत्रतो मतमभूद् वेदान्तिना सग्रहात्,
साख्याना तत एव नगमनयाद्योगश्च वैशेषिक ।
शाद्वब्रह्मविदोऽपि शब्दनयत सर्वैर्नयैर्गुम्फिता,
जैनीदृष्टिरितीह सारतरता प्रत्यक्षमुद्वीक्षते ॥ १०१ ॥

काव्य करोति परिजल्पति सस्कृत वा
सर्वा कला समधिगच्छति वाच्यमाना ।
लोकस्थिर्ति यदि न वेत्ति जगत्प्रसिद्धा
सर्वस्य मुर्खनिकरस्य स चक्रवर्ती ॥ १०२ ॥

## स्वपर दर्शने अहिंसादि आचारोपदेशः

न कर्तृत्व न कर्माणि लोकस्य सृजति प्रभु ।
न कर्मफलसयोग स्वभावस्तु प्रवर्त्तते ॥ १ ॥
गीता० अ ५ श्लोक-१४

नादत्ते कस्यचित् पाप, न चैव सुकृत प्रभु ।
अज्ञानेनावृत ज्ञान तेन मुह्यन्ति जन्तव ॥ २ ॥
गीता० अ ५ श्लोक १५

यो मा सर्वगतो ज्ञात्वा न च हिंसेत् कदाचन । (गीता०)
तस्याहं न प्रणश्यामि य'च मा न प्रणश्यति ॥ ३ ॥

अहंकारबलं दर्पं, कामं क्रोध परिग्रहम् । (गीता)
विमुच्य निर्मम शान्तो, ब्रह्मभूयाय कल्पते ॥ ४ ॥
कथमुत्पद्यते धर्म, कथं धर्मो विवर्धते ।
कथं च स्थाप्यते धर्म., कथ धर्मो विनश्यति ॥ ५ ॥
सत्येनोत्पद्यते धर्मो, दयादानेन वर्धते ।
क्षमायां स्थाप्यते धर्मो. लोभाद्धर्मो विनश्यति ॥ ६ ॥
कदाचिदपि मुच्येत, लोहकाष्ठादियन्त्रितः ।
पुत्रदारैर्निबद्धस्तु, न विमुच्येत कर्हिचिद् ॥ ७ ॥
अधीत्य वेदशास्त्राणि, संसारे रागिणश्च ये ।
तेभ्यः परो न मूर्खोऽस्ति, सधर्माश्वाश्वशूकरैः ॥ ८ ॥
देहिन. सुखमीहन्ते, विना धर्मं कुतः सुखम् ।
दयां विना कुतो धर्म-स्तस्मात्तस्यां रतो भव ॥ ९ ॥
सा किं सभा यत्र न सन्ति वृद्धा,
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न चैव सत्य,
सत्य हि तद्यत्र परस्य रक्षा ॥ १० ॥
न हिंस्यात् सर्वभूतानि, नानृतं वा वदेत् कत्रचित्
नाहितं नाप्रियं ब्रूयात्, न स्तेनःस्यात् कथञ्चन ॥११॥
(वराह पुराण अ १६ पृष्ठ ५५३.)
अहिंसा परम पुण्यं, पुण्यमिन्द्रियनिग्रहम् ।
सर्वभूतदया पुष्पं, क्षमा पुष्पं विशेषत. ॥ १२ ॥
ध्यानपुष्प तप पुष्पं, ज्ञानपुष्पं च सप्तमम् ।
सत्त्व चैवाष्टमं पुष्पं, तेन पुष्यन्ति देवताः ॥ १३ ॥
जीवानां रक्षणं श्रेष्ठं, जीवा जीवितकाङ्क्षिणः ।
तस्मात्समस्तदानेभ्यो—ऽभयदानं प्रशस्यते ॥ १४ ॥
मार्कण्डपुराण

नाहत्वा प्राणिना हिंसा, पितृन् मासेन तर्पयेत् ।
न च प्राणिवध स्वर्ग्य—स्तस्मा मास विवर्जयेत् ॥१५॥
(મનુસ્મૃતિ અધ્યાય ૫)

नासूर्ये हि व्रजेन्मार्गे, नादृष्ट्वा भूमिमाक्रमेत्
परिपूताभिरद्भिश्च कार्यं कुर्वीत नित्यश ॥ १६ ॥

दृष्टिपूत न्यसेत्पाद, वस्त्रपूत पिबेज्जलम् ।
सत्यपूता वदेद्वाणीं मन पूत समाचरेत् ॥ १७ ॥

नाह स्वर्गफलोपभोगरसिको नाभ्यर्थितस्त्व मया,
सतुष्टस्तृणभक्षणेन सतत साधो न युक्त तव ।
स्वर्गे यान्ति यदि त्वया विनिहिता यज्ञे ध्रुव प्राणिनो
यज्ञ किं न करोषि मातृपितृभि पुत्रैस्तथा वान्धवै ॥१८॥

हिंसाप्रवधक मास—मधमस्य च वर्धक ।
दु खस्योत्पादक मास तस्माद् मास न भक्षयेत् ॥१९॥
મહાભારત

तिलसर्षपमात्र तु यो मास भक्षयेन्नर ।
स याति नरक घोर, यावच्चन्द्रदिवाकरा ॥ २० ॥ „

स्वमास परमासेन यो वर्धयितुमिच्छति ।
नास्ति क्षुद्रतरस्तस्मात्, स नृशसतरो नर ॥२१॥ „

सुरा मत्स्या मधुमास—मासव कृशरोदन ।
धूर्तैं प्रवर्तित ह्येतन् नैतद्वेदेषु कल्पितम् । २२ ॥
(મહાભારત અ ૯૨)

घातकश्चानुमन्ता च भक्षक क्रयविक्रयी ।
लिप्यन्ते प्राणिघातेन, पञ्चैतेऽपि युधिष्ठिर ॥ २३ ॥
(મહાભારત)

यावन्तः पशुरोमाणि, पशुगात्रेषु भारत ।
तावद्वर्षसहस्राणि, पच्यन्ते पशुघातकाः ॥ २४ ॥

મહાભારત

यूकामत्कुणदंशादीन्, ये जन्तून्न तुदन्ति च ।
पुत्रवत् परिरक्षन्ति, ते नराः स्वर्गगामिनः ॥२५॥ ,,

सर्वत्र कार्या जीवानां, रक्षा चैवापराधिनाम् ।
आतपादौ च ये घ्नन्ति, ते वै नरकगामिनः ॥२६॥ ,,

विंशत्यङ्गुलमानं तु, त्रिंशदङ्गुलमायतम् ।
तद्वस्त्रं द्विगुणीकृत्य, गालयित्वा पिबेज्जलम् ॥२७॥ ,,

तस्मिन् वस्त्रे स्थितान् जीवान्, स्थापयेज्जलमध्यतः ।
एवं कृत्वा पिबेत्तोयं, स याति परमां गतिम् ॥२८॥ ,,

अहिंसा तु परोधर्मः, सर्वेषां प्राणिनां यतः ।
तस्मात् सर्वप्रयत्नेन, वस्त्रपूतेन कारयेत् ॥ २९ ॥

पीड्यन्ते जन्तवो येन, जलमध्ये व्यवस्थिताः ।
स्नानेनानेन किं पार्थ, पुण्यं पापं समाचरेत् ॥ ३० ॥

(એકાદશ પુરાણે)

त्रैलोक्यमखिलं दत्त्वा, यत्पुण्यं वेदपारगे ।
ततः कोटिगुणं पुण्यं, वस्त्रपूतेन वारिणा ॥ ३१ ॥

ग्रामाणां सप्तके दग्धे, यत्पापं समुत्पद्यते ।
तत्पापं जायते पार्थ, जलस्यागलिते घटे ॥ ३२ ॥

( વિષ્ણુ પુરાણ )

संवत्सरेण यत्पापं, कैवर्तस्यैव जायते ।
एकाहेन तदाप्नोति, अपूतजलसंग्रही ॥ ३३ ॥

(વિષ્ણુપુરાણ)

य कुर्यात् सर्वकार्याणि, वस्त्रपूतेन वारिणा ।
स मुनि स महासाधु, स योगी स महाव्रती ॥ ३४ ॥

यथात्मन प्रिया प्राणा, तथा तस्यापि देहिन ।
इति मत्वा न कर्त्तव्यो, घोरप्राणिवधो बुधै ॥ ३५ ॥

यस्मिन् गृहे सदा नाथ मूलक पचति जन ।
श्मशानतुल्य तद्वेश्म, पितृभि परिवर्जितम् ॥ ३६ ॥

(શિવપુરાણે)

मूलकेन सम भोज्य, यस्तु भुङ्क्ते नराधम ।
तस्य शुद्धिर्न विद्येत, चान्द्रायणशतैरपि ॥३७॥ ,,

भुक्त हलाहल तेन, कृत चाभक्ष्यभक्षण ।
वृन्ताकभक्षणाच्चापि नरा यान्त्येव रौरवम् ॥३८॥ ,,

यो ददाति मधु श्राद्धे मोहितो धर्मलिप्सया ।
स याति नरक घोर, खादकै सह लम्पटै ॥ ३९ ॥

यस्तु वृन्ताककालिंग—मूलकानाञ्च भक्षक ।
अन्तकाले स मूढात्मा न स्मरिष्यति मा प्रिये ॥ ४० ॥

ઇતિહાસ પુરાણ

अभक्ष्याणि न भक्ष्याणि कदमूलानि भारत ।
नूतनोद्गमपत्राणि वर्जनीयानि सर्वत ॥ ४१ ॥

નામ પુરાણ ગ્રંથ

पुत्रमास वरमुक्त न तु मूलकभक्षणम् ।
भक्षणान् नरक याति, वर्जनात् स्वर्गमाप्नुयात् ॥४२॥

નાગપુરાણ ગ્રંથ

गोरस मासमध्ये तु मुद्गादिके तथैव च ।
भक्षयेत्तद् भवेन्नून मासतुल्य युधिष्ठिर ॥ ४३ ॥

પદ્મ પુરાણ

मृदो भारसहस्त्रेण, जलकुम्भशतेन च ।
न शुध्यन्ति दुराचारा., स्नातास्तीर्थशतैरपि । ४४ ॥

સ્કંદ પુરાણ

मद्ये मांसे मधुनि च, नवनीते तक्रतो बहिः ।
उत्पद्यन्ते विलीयन्ते, सूक्ष्माश्च जन्तुराशय. ॥ ४५ ॥

सप्तग्रामे च यत्पापं, अग्निना भस्मसात् कृते ।
तदेव जायते पापं, मधुबिन्दुप्रभक्षणात् ॥ ४६ ॥

મહાભારત

असे वसति रुद्रश्च, मांसे वसति जनार्दन. ।
शुक्रे वसति ब्रह्मा च, तस्मान्मांसं न भक्षयेत् । ४७ ॥

यत्र जीव. शिवस्तत्र, न भेद शिवजीवयो ।
न हिंस्यात्सर्वभूतानि, शिवभक्तिचिकीर्षकः ॥ ४८ ॥

न शरीरमलत्यागान्–नरो भवति निर्मलः ।
मानसे तु मले त्यक्ते, भवत्यत्यन्तनिर्मल ॥ ४९ ॥

स्वमांसं दुर्लभं लोके, लक्षेणापि न लभ्यते ।
अल्प मूल्येन लभ्येत, पलं परशरीरजम् ॥ ५० ॥

(સ્કંધ પુરાણ)

यथा पङ्केन पङ्कांकः, सूरया वा सूराकृतम् ।
तथैवेकां जीवहिंसां, न यज्ञै मार्ष्टुमर्हति ॥ ५१ ॥

ભાગવતે સંધ-૧

सर्वेऽपि च सम्बन्धा, प्राप्ता जीवेन सर्वजीवैः ।
तन्मारयन् जीवान् मारयति संबन्धिनः सर्वान् ॥ ५२ ॥

ભક્ત પરિજ્ઞા

दयांविना देवगुरुक्रमार्चा, तपांसि सर्वेन्द्रिययन्त्रणानि ।
दानानि शास्त्राध्ययनानि सर्वं, सैन्य गतस्वामि यथा वृथैव।५३

रक्त शब्दे हरिण, स्पर्शे नागो रूपे च वारिचर ।
कृपणपतङ्गो रूप भुजगो गन्धे ननु विनष्ट ॥१९॥
(ज्ञाताधर्मकथाङ्गे)

जह मल्लिस्स महाबल भवम्मि तित्थयरनामबंधेऽवि।
तव विसय थेव माया जाया जुवइत्तहेउत्ति ॥२०॥

जाव न दुक्ख पत्ता माणभसं च पाणि णो पाव ।
ताव न धम्म गेण्हंति, भावओ तेयलीसउव्व ॥२१॥

सुपहुपि तव किलेसो नियाण दोसेण दूसिओ सतो । ,,
न सिवाय दोवतीए जह किल सुकुमालिया जम्मे ॥२२

वास सहस्स पि जइ काऊण सजम सुविउलपि ।
अते किलिट्ठभावो न विसुज्झइ कडरीउव्व ॥२३॥

दु खात्मकेषु विषयेषु सुखाभिमान
सौख्यात्मकेषु नियमादिषु दु खबुद्धि ।
उत्कीर्णवर्णपदपङ्क्तिरिवान्यरूपा
सारूप्यमेति विपरीतगतिप्रयोगात् ॥ २४ ॥

परदारानिवृत्तानामिहाकीर्ति विडम्बना । (प्रश्न व्याकरणे)
परत्रदुर्गप्राप्ति दौर्भाग्य पण्डता तथा ॥ २' ॥
(बृहत्कल्पे)

उस्सग्गेण निसिद्धाइं जाइ दव्वाइं सथरे मुणिणो ।
कारणजाए जाते सव्वाणिवि ताणि कप्पति ॥२ ॥

असमारम्भ जम्भ हरति रय तेण होइ रयहरण ॥ ७॥

तुरद्द धम्म काउ मा हु पमाय खणपि कुव्वित्था ।
बहुविग्घो हु मुहुत्तो मा अवरण्ह पडिच्छाहि ॥२८
(व्यवहारसूत्रे)

सव्वो गुणाण पात्तो सव्वोय विमोक्खगो य कम्माण ।
रागदोस विमुक्को होइ समो सव्वजीवाणा ॥२९॥

अशक्यप्रत्युपकाराश्च भगवन्तो धर्माचार्याः ॥ ३० ॥ ,,
जल्लेसाइं दव्वाइं, परियाइत्ता कालं करेइ तल्लेसेसु उववज्जइ ॥ ३१
नखलु कामी मण्डनप्रीयो भवति ॥ ३२ ॥ (દશવૈકાલીકે)

આવશ્યકે

ओसीमए सप्पो जोयणसए विज्जो किं करेहिति ॥ ३३ ॥
फल अत्थि मग्गविसुद्धीए ॥ पुण्णेण रज्जं लब्भइ ॥ ३४ ॥ ,,
पुण्यफलो जिनगुणसंकल्प ॥ ३५ ॥ ,,
कर्मकृत लोकवैचित्र्यम् ॥ ३६ ॥ (उत्तराध्ययने)
गृहवासो बहुसावद्यः ॥ स्वकृतकर्मभुजोहि जन्तवः ॥ ३७ ॥ ,,
दुष्करं च परगुणोत्कीर्तनम् ॥ ३८ ॥ (આચારાંગે)
निन्दा हि किल द्वेषसम्भवा—(भगवत्याम्) ॥ ३९ ॥
परिणामसुन्दरं तदात्वकटुकमप्युपादेयम् ॥ ४० ॥ (બૃહત્કલ્પે)

---

# सूक्त वाक्य संग्रह

अङ्गीकृतं पालयेत् ।
अवद्धमुखो जनः ।
अज्ञाहि पशुवज्जनाः ।
अनाचारं नाचरेत् ॥
अनिषिद्धं अनुमतं स्यात् ।
किमभ्यासेन दुष्करम् ।
किं न स्यात्पुण्य सम्पदः ।
किमसाध्यं महोजसाम् ।

किं न कुर्यात् स्मरातुरः ।
आप्तो हि स्फुटभाषिणः ।
क्षणिकं सर्वमेव हि ।
किं यमस्य दवीयसि ।
कार्यं हि खलु कारणात् ।
अगृध्नोरनुगा लक्ष्म्यः ।
अस्वातन्त्र्य कुलस्त्रीणाम् ।
कोहसमो वेरिओ नत्थि ।

